॥ छागलेयोपनिषत् ॥

ॐ ऋषयो वै सरस्वत्यां सत्रमासत । तेऽथ कवषमैलूषं दास्याः पुत्र इति दीक्षाया आच्छिदन् । ते होचुः । अप वा एतदृग्यजुषादप साम्न इति । स होवाच । भगवन्तो यदिदं सत्रमाध्वै यदृचोऽधीध्वै यद्यजूंषि यत्सामानि कस्यायं महिमेति । ते होचुर्ब्राह्मणा वाव स्मस्तेषामेवमिति ॥

स होवाच । यदिदमिच्छाचिदिच्छाचिदीक्षध्वै किं तद्येन ब्राह्मण इति । ते होचुर्यदिदमृग्यजुषैरेवोपवत्वन्नो जुहुवुर्यद्वैनमुपाघ्रासिषुर्यदुपानेषतैतद्वाह्मणा इति । स हाविदूर एव शवशयितमात्रेयमच्छावदमुपदर्शयन्नुवाच । यदिदमृग्यजुषैरुपवत्वं जुहोपाघ्रासीदथोपानेष्ट नैतदत्यगादिति । किं तदिति होचुः ॥

स होवाच । नैमिषेऽमी शुनकाः सत्रमासत । तेषामात्रेयोऽच्छावदः सर्वाण्येवावर्तयद्यद्याज्या यदनुवाक्या यत्प्रातरनुवाको यत्प्रउगं यदाज्यं यन्मरुत्वतीयमित्यथ यन्महावीरसम्भरणानि यदग्नेरभिवर्तनानि यद्राजाभिक्रयणानि यदभिषावित्राणि यदौपयामानि यदुपमन्त्रणान्यथ यत्त्रिवृत्पञ्चदशः सप्तदश एकविंश इति । क्वास्य तदगादिति । तेहामुहन् । अथैते सर्व एवोपसमेत्योचुरुप नो नयस्वेम एव त इति । स ह स्मयमान उवाच । सम्पश्यध्वा एव मा प्रमदत । न होत्तमानधम उपनेतेति । ते होचुर्मैव स्मोपनथा गतिस्तु त्वमिदिति ॥

स होवाच । कुरुक्षेत्रं एवोपसमेत्य ये बालिशास्तानुपाध्वै । ते व इदं प्रवक्ष्यन्तीति । ते ह तत एवोपसमेत्य कुरुक्षेत्रमुपजग्मुः । ते ह बालिशानेवोपासदन् । तानिम उपसीदत एव विदाञ्चक्रुरिति कामुका इति । ते होचुर्यत्किमिव बालिशानुपासदत महाशाला वै महाश्रोत्रिया वर्षीयांसः सन्तः यन्महाशाला महाश्रोत्रिया वर्षीयांसः कुरुक्षेत्रमध्यासत इति । ते हान्योन्यस्याभिसमीक्षामासुः । ते हापश्यन्न हास्मान्मिथुचिदेवासाववोचद्वालिशानेव चैतान्विचक्षतेति । ते होचुर्नमस्यानतीव वचो रेचयिष्यथ यदन्तर्नोऽसाविह प्राहैयात् । यथैव तु स्मोपसन्ना अथानसूयवो यथोपश्रद्धिन इति ॥

ते होचुः । किं वा अस्मत्प्रतीच्छथेति । ते होचुः । नैमिषेऽमी शुनकाः सत्रमासत । तेषामात्रेयोऽच्छावदः सर्वाण्येवावर्तयत् । यद्याज्या यदनुवाक्या यत्प्रातरनुवाको यत्प्रउगं यदाज्यं यन्मरुत्वतीयमित्यथ यन्महावीरसम्भरणानि

यदग्नेरभिवर्तनानि यद्राजाभिक्रयणानि यदभिषावित्राणि यदौपयामानि यदुपमन्त्रणान्यथ यत्त्रिवृत्पञ्चदशः सप्तदश एकविंश इति ।
क्वास्य तदगाद्यदयं शवशयितमशयिष्टेति ।
ते होचुर्नहासंवत्सरवासिनामनुब्रूयादिति खलु नः पूर्वेऽन्वशिषन् ।
यत्संवत्सरं वत्स्यथाथ वेदिष्यथेति । ते ह संवत्सरमूषुः ॥

ततो ह बालिशा ऊचुरवात्त वा संवत्सरमिमे ब्राह्मणाः ।
हन्तैषामनुब्रवामेति । ते ह गृहीत्वैवैनान् पथोऽभिसमीयुः ।
ते ह सङ्क्रीडत एव कूबरिणो रथकट्यामविन्दन् । ते होचुः सम्पश्यध्वमिति । किं हीति । कूबरिणमेव सौम्या इति । तथेति ।
कथमिवेति । यथैवोपसृत्वरो वार्धिस्तिर्यगुल्ललन्तीभिरिव वीचिभिः शफाभिरेवोपस्कन्दन्नुत्प्लवेदेवं हैवैषोभिसृत्वराणामेव धुर्याणां चक्रमतामरीणामुत्प्लवतीति । यथैवासौ प्रतिसृत्वरेण समः समेव क्रीडेदेवं हैष सङ्क्रीडतीति ।
यथैवासावितश्चेतोऽमुतश्चामुतश्च सम्प्रद्रवत इवोपशुप्यत इवोपस्कन्दमभिमृद्नात्यभिपातयेदेवं हैष इतश्चेतश्चामुतश्च सम्प्रद्रवत इवोपशुप्यत इवोपस्कन्दमभिमृद्नात्यभिपातयति ।
यथैवासौ राजानं वा राजपुरुषं वा निलयनं प्रायेदेवं हैवैष यन्ता निलयनं प्रापयतीति । ते होचुरपीदं साधीय इति । साधीय इति होचुः । ते ह तस्यैव पन्थानमनुप्रातिष्ठन्ननन्तं ह सायाहन्येवोपसम्पादयामासुः ॥

तं यदावसायाश्वांस्तक्षापोह्यापागादथ बालिशा व्यलिष्ट । अहीदृशत् । कथमिवेति । ते होचुर्यथैतं काष्ठभारमानद्धमनुपश्यामस्तथैवावशो भूस्थः स्पन्दते । नेङ्गते न विवर्तते न च वीत इति । ते ह बालिशा ऊचुर्यदयमीदृगभूत् किमस्यापागादिति । तक्षैवेति ।
तथैवैतत् सौम्या इति । आत्मा वा अस्य प्रचोदयिता करणान्यश्वाः शिरा नद्ध्रयोऽस्थीन्युपग्रहा असृगाञ्जनं कर्म प्रतोदो वाक्यं क्वाणनं त्वगुपानह इति । स यथा प्रचोदयित्रापोज्झितो नेङ्गेन्न रुरुवीतैवं हैष प्राज्ञेनात्मनापोज्झितो न ब्रूते न चैत्यपि न श्वसत्यपि पूयत्यपि श्वान उपधावन्त्यपि काकाः पतन्त्यपि गृध्रा आस्कन्दन्नपि शिवा जिघत्सन्निति । ते तत एव द्रागिव व्यज्ञासिषुः ।
ते ह पादयोरेवाभिमर्श्य बालिशानूचुः । न ह वाव नस्तद्येन निष्कुर्म इममेवेत्यञ्जलिं कृत्वोपास्थिषतेत्याह
भगवान् छागलेयस्त इमे श्लोकाः-
यथैतत्कूबरस्तक्ष्णापोज्झितो नेङ्गते मनाक् ।
परित्यक्तोऽयमात्मा नस्तद्वद्देहो विरोचते ॥ १॥

यदस्य प्रधयश्चक्रा युगमक्षो वरत्रिका ।
प्रतोदश्चर्मकील..... ॥ २॥ एतावानेवोपलब्धः